# प्लुत शिक्षा

बृहस्पतिसुतस्याग्निहोत्रं जुहोति संश्रवा द्वे द्वे
मित्रोऽसि सप्त प्रथमत्वष्टा
ब्रह्मवादिनोऽद्भिर्मनुरेकमेकम् येदेकेन यजुषा वाग्वै
ब्रह्मवादिनो विचित्यः पर्यग्निर्द्वे द्वे पशुमालभ्य
ब्रह्मवादिनस्सत्वाअध्वर्युस्स्याद्यस्सोमं प्राणे वा
उपाँशुपात्रेणैकमेकम्
इन्द्रो वृत्रमहन् तस्य नमध्यमा समिष्टयजूँषि द्वे द्वे
सोमो वै सहस्रमेकम्
सहस्रतम्या न मध्यमा द्वे
भूर्भुवस्त्रीण्युत्सृज्यां द्वे
एवं चत्वारिंशत्संख्याः प्लुताः
एतेषां मध्ये रङ्ग प्लुता अप्युक्ताः
तत्पदानि वक्ष्यामः ॥
ममाँ तथोपहूताँ च श्लोकमथसुमङ्गलाम् ॥
वाक्ये यद्ध्राँममामादिपञ्चरङ्गप्लुताः स्मृताः ॥
संहितायां प्लुताः षट्त्रिंशत् रङ्गप्लुताश्चत्वारः

परायाते एकं एवं मिलित्वा एकचत्वारिंशत्
अथप्लुतोदाहरण वाक्यानि श्लोकरूपेण स्पष्टीकरोति--
अग्ना इत्यथ पत्नीवाः स्थेयोऽग्नीस्त्वगृहा इन
उपस्थेयाभिनत्ती च भिनत्त्येती तथा स्तुही
ब्रह्मान् ब्रह्मान्तथाब्रह्मान् ब्रह्मान् राजानगानपि
प्राजापत्यास्ततः कार्या होतव्यां च हवीस्ततः
सोमा विचित्याअत्ताना अन्वारभ्या अवेरपाः
पशूना जुहवानी च माहौषाग्ना इति स्मृताः
अतिष्ठिपा यज्ञपतावुत्सृज्यान्द्वयमेव च
लाजीञ्छाचीन्त्सहस्राञ्च सप्तत्रिंशत्प्लुताः स्मृताः
ममामित्यादिपञ्चरङ्गप्लुताः श्लोकरुपेण पूर्वणैवोक्ताः
हौषां पूर्वं मकारस्तु सहस्रां पूर्वतस्तनीम्
यद्विकर्णी यद्विकर्णी चत्वारो न प्लुताः स्मृताः
इति प्लुतविचारः
करोतु तामभीमां च इन्द्रस्य तनुवं प्रयम्
मयिदक्षक्रतूस्विन्नस्नात्वी न प्लुतसंज्ञिकाः ॥
प्लुतप्रकरणं समाप्तम्

इति प्लुत शिक्षा समाप्ता